# अलीबाबस्य कथायाः नूतनावतारः ।

## कण्टकार्जुनः

दूरातीतः स कालः यत्र मन्वादिप्रणीतं राजशासनं दण्डशासनं वा पृथिव्यां प्रथितमासीत् । अस्ति संप्रति मानवैः विचिता कापि अभिनवा शासनविधा लोकशासनाख्या । समाजविचारस्य दोलायमानः लम्बकः संप्रति अपरां कोटिमारूढः। लोकशासनमूल्येषु जनाः अधुना तथा निरूढादराः यथा येषु येषु प्राचीनग्रन्थेषु तद्विसंवादिनोऽर्थान् पश्यन्ति, तांस्तान् अदग्ध्वा न विरमन्ति । न च विमृशन्ति यत् एवंविधाचाराः वयमपि अबोधपूर्वं दण्डशासनपथमेव अनुसरामः इति । इत्थंगते लोकनेतृक्षोभात् प्राचीनवाङ्मयपरित्राणाय तदनुरागिणां नान्यः पन्थाः दर्शनमवतीर्णः अन्यत्र ईदृशवाङ्मयस्य परिवर्तनात् संस्करणाद् वा । यावता नाधुनातने काले साधुपरित्राणाय ईश्वरः अवतरितुमुत्सहते । यतः के साधवः, के च असाधवः इति निश्चये कर्तव्ये वेदमात्रपरिनिष्ठितज्ञानत्वाद् ईश्वरोऽपि मुह्यति, किमुत तपस्विनः मानुषधर्माणः कवयः ।

एवं संप्रधार्य ज्येष्ठैः नागरिकैः संघटिता काचित् समितिः यया वैश्विककक्षायां प्राचीनवाङ्मयस्य परिष्करणं कर्तव्यम् यथा तत् लोकशासनप्रवणं भवेत्। (अधुनातने हि काले यत् किमपि कर्तव्यं वैश्विककक्षायामेव कर्तव्यं भवति, यदि इष्यते महाजनविचारगोचरं भवितुम् ।) तत्र ईश्वरगीता आबालवृद्धं प्रसिद्धत्वात् लोकशासनप्रवणताकरणाय प्रथमम् अधिकर्तव्या इति केनापि गीताभक्तेन सदस्येन सूचितम्। तद् अन्यैः अनुमोदितम् । आरब्धं संस्करणम्। तत्र प्रथमं नामान्तरकरणम् - 'लोकगीता' इति । तदनु पाठान्तरकरणम् । यथा -

*धृतराष्ट्र उवाच ।।* *लोकक्षेत्रे सभाक्षेत्रे समवेता युयुत्सवः ।*
*भाजपा यादवाश्चैव किमकुर्वत संजय ।। १ ।।*

*संजय उवाच ।।* *दृष्ट्वा तु भाजपानीकं व्यूढं श्रीयादवस्तदा ।*
*पास्वानमुपसंगम्य लालू वचनमब्रवीत् ।। २ ।।*
*पश्यैतां भाजपुत्राणां पास्वान महतीं चमूम् ।*
*व्यूढामटलवीरेण रास्वपुत्रेण धीमता ।। ३ ।।*

*अत्र शूरा महेष्वासा महाजनसमा युधि ।*
*यशवन्तो रमेशश्च विजया मुरली तथा ।। ४ ।।*
*सिकन्दरो भारती च महाकाषायधारिणी ।*
*रामो जेठमलानी च....*
*ततः कण्ठाश्च हस्ताश्च पादाश्च ध्वनिवर्धकाः ।*
*सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ।। १३ ।।....*

अत्रान्तरे सदस्यान्तरेण पृष्टम् - 'किम् ईदृशी गीता देवालयेषु प्रवचनार्थम् अधिक्रियेत, अधिकृता वा श्रोतृभिः अनुमन्येत? अपि च यद् गीतायाम् आक्षेपार्हं नास्ति तस्य निराकरणे व्यर्थः प्रयासः ।' अन्ते च सर्वैः निर्णीतम् - यावद् गीतायां चातुर्वर्ण्यवर्णनपरं तावन्मात्रं निरसनीयं संस्करणीयं वा, शेषं न स्प्रष्टव्यम् इति। तदनुसारेण शूद्रस्थाने ब्राह्मणः, ब्राह्मणस्थाने च शूद्रः प्रतिष्ठापितः। तथा हि नवमाध्याये *'येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्राः', 'किं पुनर्ब्राह्मणाः पुण्याः'* इत्यनयोः स्थानयोः *'स्त्रियो वैश्या ब्राह्मणाश्च'* इति, *'किं पुनः पावनाः शूद्राः'* इति च परिवर्तनं कृतम् । एतावतापि स्त्रीमुक्तिसंप्रदायिनां तोषो न स्याद् इति *'स्त्रियः'* इति निर्देशः *'नराः'* इति परिवर्तितः । अष्टादशाध्याये च *'ब्रह्मकर्म स्वभावजम्'* इत्यत्र *'शूद्रकर्म स्वभावजम्'* इति, *'शूद्रस्यापि स्वभावजम्'* इत्यत्र *'ब्रह्मणोऽपि स्वभावजम्'* इति च परिवर्तनं कृतम् । भाजपा यादवाश्च गीतायाः निष्कासितः ।

समाप्तं गीतासंस्करणम् । अधुना किं करणीयम् ? तत्र कश्चिदाह - अधुना कथावाङ्मयम् । यावता कथावाङ्मयमेव संस्करोति शिशूनां कोमलानि मनांसि, भवन्ति च शिशवः समाजस्य भाविनी प्रतिष्ठा । आसीत् समितिसदस्यानाम् अविप्रतिपन्ना धारणा यत् कथावाङ्मयमेव आदौ परिष्करणीयम् । अथ यत् प्रौढानां वाङ्मयं - यथा कालिदासस्य शेक्स्पीयरस्य वा - तत्परिष्करणे पश्चात् क्रियमाणेऽपि न किमपि परिहीयते। (अपि च कष्टं खलु संस्करणं कठोरतां गतानां प्रौढमतीनाम्।) एवं निश्चित्य समितिसदस्यैः निदर्शनत्वेन परिष्कृता अरबरात्रिप्रथिता बालप्रिया कथा - अलीबाबः चौरचत्वारिंशत् च । सा चैषा अत्र साररूपेण प्रस्तूयते -

बगदादस्य अदूरे बहुषु दुर्गमासु गिरिगुहासु (वस्तुतः, कुतोऽस्मिन् सिकतामये प्रदेशे गिरीणां गुहानां वा संभवः ? तस्मात् गुहाख्यानि मानवनिर्मितानि दुर्गाण्येव आसन् इति संभाव्यते ।) चौराणां बहवः गणाः आसन्, ये काले काले

स्वस्वसमयानुसारेण नगरमागत्य श्रीमतां जनानां धनभारं लघूकुर्वन्ति स्म । कदाचिद् यदृच्छया नगररक्षकैः सार्कं विरोधोऽपि प्रासज्यत यदा अल्पसंख्यत्वात् त्यक्तारम्भाः ते स्वनिलयं प्रत्यावर्तन्ते स्म । एकदा समकालं त्रयो गणाः आक्रामन्, न च रक्षकाः तान् सर्वान् नियन्तुम् अशक्नुवन् । तदा प्रथममेव चौरगणैः संख्यासामर्थ्यं साक्षात्कृतम् । अनेन व्यतिकरेण प्रचोदिताः ते आत्मपरीक्षणे प्रवृत्ताः - किं तावदस्माकं परंपरागताः कार्यरीतयः साधनानि च परिवर्तनम् अर्हन्ति इति । युक्तमाह याज्ञवल्क्यः 'आत्मा वा अरे द्रष्टव्यः' इति ।

तदनु कीदृशः सहकार्येण कार्यकरणावसरः इति विचारयितुं संमिलिताः गणानां नेतारः । (इदं चात्र अवधारणीयं यत् एते चतुर्दशसंख्या आसन्, न चत्वारिंशत्संख्याः, यथा प्रथा प्रायेण लोकेषु । न च तावत्संख्याः *चौराः*, किंतु तेषां *गणाः* - या वा का वा भवतु तस्य तस्य गणस्य सदस्यानां संख्या ।) कृत्वा च सुदीर्घां चर्चां प्राप्ताः ते ऐकमत्यम् अल्पिष्ठकार्यक्रमनिर्धारणे, यदाश्रयेण निखिलाः आयत्यां व्यवहारा भवेयुः इति । सर्वप्रधानस्तु प्रस्तावः अयमासीद् यत् सर्वेषां गणानां केनापि एकेन नेतृणा भवितव्यम्, त्रिभिश्च संवत्सरैः नवनेता निर्वाचनीयः, तेन च त्रिसंवत्सरात्मके कार्यकाले सर्वेषु साहसोपक्रमेषु सर्वेषां गणानां संसूत्रणं करणीयम् इति, बहूनां हि नेतृणां समवायः कार्यं नाशयति इति । संप्रति समयः प्रथमं नेतारं निर्वाचयितुम् । संसूचितानि नामानि । तत्र प्रथमं नाम आसीत् तस्य गणस्य नेतुः यस्यासीत् सर्वाधिका सदस्यसंख्या । किंतु सहकार्यप्रयोगोऽयं सिद्धिं यास्यति वा न वेति शङ्कमानेन प्रत्याख्यातमिदं पदं तेन, न संदेहपदवीमारूढः समर्थनभिक्षणार्थम् अन्यान् आराधयिष्यामि इति । आश्वासितं च - यः समवायस्य नेता स्यात् तमहं सानुयायी बहिः स्थितः समर्थयिष्यामि इति । एवम् अन्यैरपि प्रत्याख्याते प्रधानपदे स एव निर्वाचनीयः संवृत्तः, यस्यासीत् तालिकायां चरमः क्रमः ।

अनया योजनया परां सिद्धिं गताः चौरगणाः । तेन प्रोत्साहितैः तैः संप्रतिपन्नं यत् सर्वमपि लोप्त्रम् एकत्रैव स्थापनीयम्, तच्च स्थानम् वैद्युत्कणिक-कीलनेन (इलेक्ट्रॉनिक लॉक) दूरसंकेतयन्त्रितेन (रिमोट कण्ट्रोल) तथा सुगुप्तं यथा तद् गूढसंकेतानभिज्ञेन न केनापि उद्घाट्येत । (यया विद्यार्थिनां वैज्ञानिकी दृष्टिः विकसेत् सा खलु शिक्षा । तत्तस्मात् 'तिल तिल दल दल'-सदृशेन यातुमन्त्रजपेन गुहाद्वारोद्घाटनकथनं नाम शिक्षाघाती मूढतायाः प्रकारः । अपि च, ईदृशी मूढता प्रोत्साहनाय संपद्येत अबौद्धानामपि विज्ञानवादिनां दाभोलकरसंप्रदायिनाम्, 'नास्मिन्

जगति किमपि चमत्कारकल्पम्' इतिवादिनाम्, तदाह्वाननवीकरणमात्रफला च ।) एवं कृतेऽपि सुरक्षाप्रबन्धे चौरगुहायाः गूढसंकेतः यदृच्छया उपलब्धः केनापि गर्दभयूथचारणप्रसङ्गेन वनमागतेन यूना अलीबाबाख्येन, यदा गुहोद्घाटनम् अधिकृतम् आसीत् । ज्ञातसंकेतेन च तेन यूना संगणकव्यवहारिभ्यः दूरसंकेतयन्त्रं क्रीत्वा सुदूरस्थितेषु चौरेषु समुचितं गूढसंकेतं व्यापार्य गुहाम् उद्घाट्य यथेच्छं यथानुकूल्यं वा धनं वा शून्या धनादेशा वा अपहृताः । (यदा वा तदा वा शिशुभिः ज्ञातव्यः एव धनविनिमयव्यवहारः भवति । स च कथामुखेन परिचायितः सुलभः दृढश्च भवति इति न नाम न विदितं शिक्षाविदाम्। एतेन अत्र धनादेशनिर्देशः भागी भवति ।)

गच्छता कालेन विदितमासीत् चौराणां कोऽपि विदितरहस्यः अनधिकारी चौरः (धिग् धिग् ईदृशं परस्वापहारिणं जाल्मम् !) दूरोत्सारितचौरधर्मः काले काले गुहाम् उद्घाटयति लुम्पति चास्मान् इति । ज्ञात्वा च गुहागोपने दक्षतराः सन्तः रात्रिंदिनं तदवलोकनाय गूढस्थान् रक्षिणः व्यापारयामासुः । अथ परेद्युः न अलीबाबः, किंतु तद्भ्राता कासीमः आसादितकतिपयकेन्द्रीयशोधसंचायिकः (फाइल्स्) तदाधारेण विदित-अलीबाबरहस्यः गूढसंकेतोद्घाटनाय अवशीकृतात् तस्मात् विदितवेदितव्यः *('यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान्...'* इति श्रुतिं प्रमाणीकृत्य) गुहाम् आगतः, चौरप्रयुक्तपञ्जरे पतितः प्राणैः व्ययुज्यत । समाहिताः चौराः, उत्खातः कण्टक इति । किंतु अन्येद्युः गुहागतं कासीमकलेवरं नष्टं दृष्ट्वा प्रत्यायिताः यत् अस्ति कोऽपि अन्यः जनः यः अस्माकं स्थानं रहस्यं च जानाति । तदन्वेषणाय व्यापारितः तैः कोऽपि प्रणिधिविशेषः । स च विहितवेषान्तरः नगरं गत्वा अलीबाबगृहं विचित्य अनायासोपलब्धं स्वजीनपॅण्टनिर्मातृप्रणिहितं संसज्यचित्रम् (स्टिकरम्) उद्धृत्य तद्द्वारफलके संश्लेषितवान्। एतत् संसज्यचित्रम् सनालकमलचित्राङ्कितमासीत् । अनेन प्रणिधिना दत्तस्य वृत्तान्तस्य आधारेण तत्कार्यप्रयुक्तः चौरगणः यदा नगरगतं पूर्वनिर्धारितं क्षेत्रम् आक्रान्तवान्, तदा तद्वीथिगतानि सर्वाण्यपि गृहाणि कमलचिह्नाङ्कितानि दृष्ट्वा संभ्रान्तः । (ईदृशानि हि 'स्टिकराणि' आपणे यत्र कुत्रापि लभ्यन्ते।) कर्मसंमूढचित्ताश्च सर्वे विफलप्रयत्नाः यथागतं स्वगुहां प्रापुः । दण्डितवन्तश्च प्रणिधिं प्राणैः । एवं यः अलीबाबस्य प्राणहरणार्थं नियुक्त आसीत् स एव प्राणैर्वियुक्तः, इत्यहो दैवी विचित्रा गतिः । तदुक्तम् - *'यः परस्य विषमं विचिन्तयेत्....'* इत्यादि ।

एवं विफलेऽपि महति प्रयासे न हतोत्साहाः चौराः संवृत्ताः। अलीबाबोत्खातनं हि तेषां जीवितमरणयोः विकल्पः आसीत् । तदुक्तमभियुक्तैः - *'प्रारब्धमुत्तमजना न परित्यजन्ति'* इति । किंतु इदानीम् एतत् कार्यं कठिनतरम् अभवत् यतः वैद्युत्कणिकमाध्यमैः (इलेक्ट्रॉनिक मीडिया) दूरदर्शनादिभिः प्रतिगृहम् प्रापितः अयं कमलव्यतिकरः, समाजरक्षणार्थे च सकलोऽपि जनः प्रबोधितः । अलीबाबः संप्रति सामाजिक्याः अस्मितायाः प्रतीकं संजातः । दृष्टं च चौरैः, नासौ संप्रति अक्षोभयित्वा लोकान् व्यापादयितुं शक्य इति । आकारिता चौरैः आपातिकी सभा, कृतश्च बहुधा अस्य विषयस्य ऊहापोहः । तत्र मूलभूताः केचन प्रश्नाः उपकल्पिता आसन् - अन्ततः, कोऽस्माकम् उद्देशः? अलीबाबस्योत्खातनं वा तस्य गुहाप्रवेशप्रतिबन्धो वा? इति । अतीव प्रखरा आसीत् चर्चा । चर्चान्ते सर्वेषाम् ऐकमत्यम् आसीत् यत् अनयोः पश्चिमः पर्यायः स्वीकरणीयः इति । स च कथं साधनीयः इति एतावन्मात्रं संप्रति चिन्तनीयताम् अर्हति ।

'अस्ति अत्र उपायः - अस्माभिः गुहोद्घाटनस्य वैद्युत्कणिकसंकेतः परिवर्तनीयः' - कैश्चित् सूचितम् । 'एवं कृते यदा स चौरदर्दुरकः अलीबाबः अस्माकं धनं चोरयितुं गुहां प्रवेष्टुम् प्रत्यागच्छेत् तदा संमोहमापद्येत ।'

इयं सूचना तद्विद्भिः नाभिनन्दिता, येन संगणकव्यूहान् चौरेभ्यः गोप्तुं यानि मृदुरहस्यानि (सॉफ्टवेअर) विरच्यन्ते, तानि प्राप्तेरूर्ध्वम् एकद्विसप्ताहाभ्यन्तरे एव कल्पनाढ्यैः तन्त्रज्ञैः उद्घाट्यन्ते इति प्रथितमेव सर्वेषाम् । सर्वथा नास्ति स कोऽपि उपायः येन चौराः स्वकर्मणि प्रतिबध्येरन् । सत्यपि एवं सर्वेषाम् एकस्मिन् अंशे ऐकमत्यम् आसीत् यत् नास्मिन् उपाये क्रियमाणे कापि हानिः । 'यदि एकतरः अस्माकं संकेतः भज्यते, अपरं रचयिष्यामः । कः प्रत्यवायः?'

लब्धा कापि सफलता चौरैः अनेन उपायेन । यदा पुनरपि अलीबाबः गुहां गतः, रुद्धमासीत् तस्य दूरनियन्त्रणम्, यथासीत् चौरैः उत्प्रेक्षितम् । अन्येद्युः अलीबाबः प्रभूतशुल्कप्रोत्साहितं कंचित् तन्त्रज्ञमादाय आगतः, तत्सहायश्च गुहोद्घाटने सफलोऽपि जातः । किंतु पूर्वानुभवप्रबोधितान् गुहारक्षकान् सवेगम् अभिपततः वीक्ष्य तेषां संख्याबलं सविनयं मानयित्वा अलीबाबः अगृहीतसारः एव प्रतिनिवृत्तः। ईदृशेन परिवर्तनेन प्राचीनकथागतायाः नास्ति मर्जिनायाः नवावतारकथायां किमपि कार्यं यत् तस्याः बुद्धिबलेन निर्वर्त्येत, न च अपरिहार्यं चौराणां कुम्भलीनानां तप्ततैलस्नानेन निष्ठुरं मरणम्। (तैलपक्षेऽपि महार्घतायाः परां काष्ठां गतं तैलम् एतावन्मात्रं कुत आनेतव्यम्? तस्मात् अनायासेन स्वल्पमूल्येन

वा लभ्यं जलमेव शरणम् । यत् तप्ततैलेन साध्यते, तत् तप्तजलेनापि साधयितुं शक्यम् । एतावान् सुलभः उपायः मर्जिनया कथं न चिन्तितः इति सुधीभिः विमर्शनीयम् ।)

अत्रान्तरे बगदादस्थम् उच्छिन्नम् अभूत् एकाधिकारप्रशासनम्, तत्स्थाने च प्रतिष्ठापितमभूत् लोकाधिकारप्रशासनम् । धूर्ताः चौराः नातिचिरेण नवप्रशासनं लाभकरं प्रतीत्य पूर्वं नाम (व्याजव्यञ्जकम् अत्र 'नाम'-पदम्, यथा *'कार्तान्तिको नाम भूत्वा'* इत्यत्र ।) व्यवहाराम् उत्सृज्य पूर्वगणस्थानेषु राजकीयान् पक्षान् संघटयामासुः । न चैतेन परिवर्तनेन तेषां कापि हानिः अभूत्, प्रत्युत नवीने तन्त्रे पूर्वः एव व्यवहारः अविघ्नं प्रचलति, न चात्र दण्डभयमपि, इति अनुभूय विस्मिताः सर्वे । अपि च अद्भुते अस्मिन् तन्त्रे न तेषां *लोकशत्रवः* इति दिवाभीतन्यायेन असिधाराव्रतिभिः जीवितव्यम् आसीत्, किंतु *लोकप्रतिनिधयः* इति गौरवगोचरं पदं तैः प्राप्तम् । अहो लोकतन्त्रस्य माहात्म्यम् ! जयतु लोकतन्त्रम् ! अवितथमाह कण्टकाञ्जलौ कण्टकार्जुनः मन्त्रिचौरसंवादप्रसङ्गेन -

*मन्त्री तस्करमाह कोऽपि - 'शठ रे ! लोकैः श्रमेणार्जितं*
*वित्तं भित्तिविभेदनेन हरसे, धिक् त्वां जनद्रोहिणम् ।'*
*पूर्वं प्राह परः - 'कथं जनधनं त्वं भित्तिभेदाद् विना*
*गृह्णीषे च न दण्ड्यसे च? भगवन् ! शिष्योऽस्मि ते शाधि माम् ।।'*

ईदृशं लोकतन्त्रं यैः परमेण त्यागेन बलिदानेन चापि प्रतिष्ठापितं तेषां स्मृतिदिनेषु तेभ्यः धन्यवादान् वितरितुं तेषां स्मारकेषु पुष्पचक्राणि चार्पयितुम् अतीव भक्तिभाविताः लोकप्रतिनिधयः स्मरणपूर्णं स्मारकस्थानानि उपतस्थिरे, सभासु च तद्गौरवपरिप्लुतानि भाषणानि चक्रिरे ।

केचित् चौराः मन्त्रिपदम् आरूढाः । आक्षिप्ताश्च विरोधिपक्षीयैः उत्तरं ददुः - *'न तेन चौरो भवति येनारोपास्पदं कृतः ।*
*यो वै सिद्धापराधः स्यात् तं देवास्तस्करं विदुः ।।'* इति ।

केचन च प्रतिनिधयः आत्मनः पूर्वनिवासान् कारागृहान् गत्वा काराधिपान् तर्जयामासुः - 'संप्रति अस्मदधीनं ते भागधेयम्' इति । कैश्चित् लोकसभायां प्रस्तावोऽपि प्रस्तुतः - सर्वेषां कारावासिनां निःशेषं क्षमापणं (ॲम्नेस्टी) कार्यम्, ससंमानं सानुग्रहदानं (एक्स् ग्राशिया) च प्रेषणीयास्ते स्वं स्वं गृहम् । यदा अयं प्रस्तावः चर्चार्थम् आगतः, तदा केचित् आक्षिप्तवन्तः - अनेन काराधिकारिणां वृत्तिच्छेदो भविष्यतीति । इमम् आक्षेपं परिहर्तुं प्रस्तावपक्षीयैः सूचितम् - 'अस्त्यत्र

उपायः । प्रतिग्रामं त्रिभिस्त्रिभिः वर्षैः पर्यायेण शते एकशतांशमिताः जनाः कारागृहेभ्यः प्रेषणीयाः (यथा पञ्चतन्त्रप्रसिद्धस्य दुर्दान्तस्य सिंहस्य आहारार्थं पर्यायेण प्रतिदिनम् *एकैकः* पशुः प्रेष्यते स्म ।) येन काराधिकारिणां वृत्तिच्छेदो न भवेत्' इति । एतेषां लोकनेतॄणाम् अचिरेणैव एतत् सुविदितम् आसीत् यत् *सूटकेसानि* खलु अद्भुतकार्यकरणक्षमाणि; लाभांशदानेन संतोषिताश्च आप्तजनाः समये समये प्रत्युपकुर्वन्ति । इदमपि च तैः अनुभूतं यत् अशेषलाभस्य स्वसात्करणं संघटनायाः विघटनायैव भवति; एवं चान्ते सर्वेषामपि हान्यै कल्पते । सर्वेषु ईदृशेषु कार्येषु अतिदक्षैः तैः भवितव्यम् आसीत् । तथापि साहसं कुर्वता जनेन सदैव संकटोन्मुखेन भवितव्यमेव भवति । साहसे हि श्रीः प्रतिवसति । (इदं मृच्छकटिके चौरवचनम्।) नरसिंहा एव हि सुवर्णपुष्पां चिन्वन्ति वसुंधराम्, न भीरुफेरवः । चौरचकोरा इव मुनिचन्द्रा अपि साहसिनो भवेयुः । न हि साहसे कस्यापि एकाधिकारो भवति ।

ईदृशं नूतनं रूपम् आविष्कुर्वती इयं कथा तद्विदां मण्डलेषु अभिप्रायार्थं प्रेषिता प्रकल्पप्रवर्तकैः । लब्धश्च तैः प्रतिपोषः (फीडबॅक) कतिपयैः सप्ताहैः । तत्र बहुभिः संसूचितं यत् दूरदर्शने रामानन्द-सागरकर्तृका असंख्यातप्रेक्षकमानसानां विज्ञापनधनानां चाकर्षयित्री या 'अलिफ-लैला'-नाम्नी प्रथमक्रमाङ्कस्थिता कथामाला प्रस्तूयते, सापि अनया विधया संस्कर्तव्या, *'बहुजनहिताय, बहुजनसुखाय'* च । किंतु ईदृशं संस्करणम् इमां मालां प्रथमक्रमाङ्कात् आकृष्य चरमक्रमाङ्कम् आरोपयेत्, उभयोश्च निर्मातृप्रदर्शयित्रोः धनार्जनं विपद्येत, इति विमृशद्भिः प्रत्यादिष्टा इयं संसूचना हितसुखकारिभिः, हेतुमेतं पुरस्कुर्वद्भिः - 'नैषा स्यात् जनानां मनसि स्थिता *अलिफ लैला,* यदि अनया विधया संस्क्रियेत । कामम् ईदृशी कथा बहुजनहिताय स्यात्, न जातु बहुजनसुखाय । हितं हि अन्यैः शक्यं निश्चेतुम्, न सुखम् । न च ईदृशी कथा अस्माकं हितायापि ।' एवं च मद्यप्रतिबन्धविधिरिव इयमपि प्रकल्पना बलहीना सती क्रमेण विस्मृतिपथं जगाम - अपरिदेविता, अगौरविता, अप्रगीता च ।

इतः परं न जातु वाङ्मयपरिष्करणसमित्या कथापरिष्करणसाहसं विहितम्। न च लोकशासनवत्सलैः कथावाङ्मयं दग्धम् । एवं हि साहसे श्रीरिव अश्रीरपि प्रतिवसति इति सिद्धम् । नैतत् आलोचितं शूद्रकेण विवेकिनापि । अथवा साधु इदमुच्यते - *'अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः ।'*

